## ॥ श्रीजगन्नाथस्तोत्र १ ॥

### ॥ जगन्नाथप्रणामः ॥

नीलाचलनिवासाय नित्याय परमात्मने ।
बलभद्रसुभद्राभ्यां जगन्नाथाय ते नमः ॥ १॥

जगदानन्दकन्दाय प्रणतार्तहराय च ।
नीलाचलनिवासाय जगन्नाथाय ते नमः ॥ २॥

### ॥ श्री जगन्नाथ प्रार्थना ॥

रत्नाकरस्तव गृहं गृहिणी च पद्मा
किं देयमस्ति भवते पुरुषोत्तमाय ।
? अभीर?वामनयनाहृतमानसाय
दत्तं मनो यदुपते त्वरितं गृहाण ॥ १॥

भक्तानामभयप्रदो यदि भवेत् किन्तद्विचित्रं प्रभो
कीटोऽपि स्वजनस्य रक्षणविधावेकान्तमुद्वेजितः ।
ये युष्मच्चरणारविन्दविमुखा स्वप्नेऽपि नालोचका-
स्तेषामुद्धरण-क्षमो यदि भवेत् कारुण्यसिन्धुस्तदा ॥ २॥

अनाथस्य जगन्नाथ नाथस्त्वं मे न संशयः ।

यस्य नाथो जगन्नाथस्तस्य दुःखं कथं प्रभो ॥ ३॥

या त्वरा द्रौपदीत्राणे या त्वरा गजमोक्षणे ।

मय्यार्ते करुणामूर्ते सा त्वरा क्व गता हरे ॥ ४॥

मत्समो पातकी नास्ति त्वत्समो नास्ति पापहा ।

इति विज्ञाय देवेश यथायोग्यं तथा कुरु ॥ ५॥